**विश्वे समस्तेऽखिलयोनिजाताः**
**शक्तिं भजन्तेऽत्र नमन्ति शक्तिम्**
**सृष्टेश्च पूर्वं जननी बलिष्ठा**
**शक्तिस्वरूपा तत एव वन्द्या । श.म.5**

सारे विश्व में सब प्राणी शक्ति की उपासना करते और उसके सामने झुक जाते हैं। सृष्टि के प्रारम्भ में शक्तिस्वरूप माँ सबसे अधिक बलवती थी, इसीलिए वह सर्वत्र पूजी गई।

**नरः स यो नृत्यति कर्मरक्तो**
**नार्या विमुक्तः स भवेदशक्तः**
**रायस्तदीया गदितेह नारी**
**तयैव संयुज्य नरो भवेन्ना । 1-57**

आदमी वही है जो कर्मक्षेत्र में नाचता रहता है। नारी से अलग होकर वह शक्तिहीन हो जाता है। औरत को पुरुष का धन कहा जाता है। उससे जुड़कर ही आदमी आदमी बनता है।

**वशे यस्य रक्षा न चार्थाः स्वकीयाः**
**स देशः कथं वर्तते शिष्यते वा ?**
**स्थितिः सान्यराष्ट्रस्य सिद्धौ सहाया**
**सुजेयत्वमालक्ष्य वित्ताशया च । 10-31**

जो अपनी रक्षा नहीं कर सकता तथा जिसकी अर्थव्यवस्था स्वाधीन नहीं है, वह देश कैसे टिक सकता है, और वहाँ शासन कैसे चल सकता है? उसकी स्थिति अन्य राष्ट्र की मज़बूती के लिए होती है क्योंकि वह आसानी से पछाड़ा जा सकता है और उसका धन सेवा के रूप में लिया जा सकता है।

# शक्ति-विजयम्

## हिन्दी-अर्थ-सहित

डॉ० मथुरादत्त-पाण्डेयः

मोतीलाल बनारसीदास
दिल्ली, मुम्बई, चेन्नई, कोलकाता, बंगलौर,
वाराणसी, पुणे, पटना

*प्रथम संस्करण: दिल्ली, २०११*



1292, सैक्टर 15, पंचकूला, (हरियाणा) - 134 113

फोन : 0172 - 2592167

ISBN: 978-81-208-3519-1

**मोतीलाल बनारसीदास**

४१ यू०ए० बंगलो रोड, जवाहर नगर, दिल्ली ११० ००७
८ महालक्ष्मी चैम्बर, २२ भुलाभाई देसाई रोड, मुम्बई ४०० ०२६
२३६ नाइंथ मेन III ब्लाक, जयनगर, बंगलौर ५६० ०११
सनाज प्लाजा, १३०२ बाजीराव रोड, पुणे ४११ ००२
२०३ रायपेट्टा हाई रोड, मैलापुर, चेन्नई ६०० ००४
८ केमेक स्ट्रीट, कोलकाता ७०० ०१७
अशोक राजपथ, पटना ८०० ००४
चौक, वाराणसी २२१ ००१

नरेन्द्रप्रकाश जैन, मोतीलाल बनारसीदास, बंगलो रोड, दिल्ली ११० ००७
द्वारा प्रकाशित तथा जैनेन्द्रप्रकाश जैन, श्री जैनेन्द्र प्रेस,
ए-४५ नारायणा, फेज-१, नई दिल्ली ११० ०२८ द्वारा मुद्रित

# स्वस्ति भारती

धराऽनुत्तरस्योत्तराखण्डस्याऽखण्डमण्डनायितेन सम्प्रति हरियाणा प्रदेशान्तर्गतं पञ्चकुलमभिजनमधिवसता प्राचार्यचरेण श्रीमथुरादत्त-पाण्डेय-महोदयेन रचनाञ्चितमभिनवतमं द्वादशसर्गं संस्कृत-महाकाव्यं शक्तिविजय मित्यभिधानाङ्किकतमभ्यर्णमागतमानन्दार्णवमुदञ्चयन्मे। कस्य वा सहृदस्य इदं विस्मयाय, स्मयाय, मन्दाय स्मिताय, अमन्दानन्दाय च न प्रभवेत्?

प्रस्तुत-महाकाव्यस्य शक्तिविजयस्य चराचर-प्रसवित्री महाशक्तिर्नायिकीकृतेति परो हेतुः परमाय नः प्रसादाय। वेदेषु नैकेषु महर्षिभिः सूक्तेषु सूक्तरत्नेषु शक्तिर्महिमा निभृतं निरूपितः। अतएव त्रिपुराराधनं साक्षादृग्वेदे गदितम् - तथाच - 'इयं पञ्चदशाक्षरी विद्या ऋग्वेदे आम्नाता चत्वार ईं बिभ्रति क्षेमयन्तः' (ऋ.5-47-4) इत्यादाविति निर्दधार शक्ति-रहस्य-वेदिनामग्रेसरो लक्ष्मीधरः सौन्दर्यलहरी-पञ्चमश्लोक-व्याख्यायाम्-सा खलु साक्षाद्ब्रह्मरूपा।

नूनमेष सविशेषः पुण्यानां परिणामो यच् श्री पाण्डेयमहोदयस्य शक्तिकाव्य-निर्माणेऽजायत प्रवृत्तिः।

अहमध्यवसाय-धी-धनिनमेतत्कर्तारं हृदयेनाभिनन्दामि, सर्वतोऽवारितप्रसरां लोकम्पृणाञ्च तदीयां कीर्तिपूर्तिं कामये।

सुधीजनदासानुदासः
शशिधर शर्मा

सप्तविषयाचार्यः एम.ए. (संस्कृत-हिन्दी)
डी.लिट्., विश्वसंस्कृतसमितेः सदस्यः, योगतन्त्रागमसमितेरध्यक्षः,
ज्योतिष-योग-तन्त्र सम्राट्, महामहोपाध्यायः,महाकविः,
विश्वरत्नम्, अद्वैत-वेदान्त-रत्नम्, धर्म-संस्कृति-महारत्नम्,
पंजाब-विश्वविद्यालयीय-संस्कृताचार्यः (निवृत्तः),
शलाकापरीक्षायां प्रथम-पुरस्कार-विजेता, राष्ट्रपति-पुरस्कृतः

# समाशंसा

विदन्त्येव विज्ञा यत् साम्प्रतिकेऽस्मिन्नतिविचित्रसमयान्विते समये संस्कृते विपुलं वाङ्मयं विरच्यते सुरसरस्वती-समाराधकैः। तेनेयं संस्कृतसाहित्यपरम्परा यथा सनातनी तथैव प्रतियुगं पुनःपुनर्जायमाना उषा इव नवविच्छित्तिं नूतनां च च्छविमाविर्भावयन्ती वरीवर्ति, इदानीमपि स्वे महिम्नि प्रतिष्ठिता चास्ते। वस्तुतः समसामयिकसंस्कृतसाहित्यस्य नवोन्मेषः कामपि विशिष्टामभिख्यां तनोति स्वकीयाम्। नैके उदयमानास्तरुणास्तेजस्विनः पण्डिताः प्रकटयन्ति शास्त्रवैभवमस्याः। तथा च कवयन्ति परःशतं सुकवयः निबध्नन्ति च विविधान् ग्रन्थान् अगणिता साहित्यरचनानदीष्णाः सरस्वत्याः सुपुत्रा अस्यामेव भाषायाम्। नवनवोन्मेषप्रतिभाशालिभिः सुकविभिर्विरचिते संस्कृतसाहित्ये परिलक्ष्यन्ते नवीनाः प्रवृत्तयः, युगबोधः, अभिनवा कापि चारुता च।

ऐतेषु विविधगद्यपद्यप्रबन्धनेन सरस्वत्या आराधकः, साधकः नवीनसाहित्यमार्गाणां सुविदित एवास्ते धीमान् श्रीमान्मथुरादत्तः। अस्य च कवेः लेखनी बहोः कालान्निरन्तरं साहित्यसेवासंलग्ना कविताकामिन्याः सुप्रिया सहचरी वरीवर्त्यते। कविरयं क्वचित् भावप्रवणैः समसामयिकैः रूपकैः क्वचिच्च मनोहारिभिः काव्यैः सुरसरस्वतीसपर्यां साधु व्यदधात्। सततं प्रवहमाणा अस्य कवितानिर्झरिणी सम्प्रति एतस्मिन् महाकाव्ये प्रकटीकरोति स्फीतां हृद्यानवद्याममन्दां वाग्धाराम्।

अतिविचित्रकविपरम्परावाहिनि संस्कृतमहाकाव्यसंसारे स्वल्पान्येव महाकाव्यानि नारीप्रधानानि सन्ति। एतत् प्रतिकुर्वता कालिदास-दुर्गासप्तशती-जयशङ्करप्रसादादीन् सर्वथा हृदङ्गमं विदधानेन कविना अत्र शक्तेराराधनपुरस्सरं लेखनी सफलतां नीता। अथ च अस्मिन् महाकाव्ये नवीनं बिम्बविधानं अभिनवा परिकल्पना च लसति श्लिष्यति च मनसि सर्वथा, तद्यथा प्रथमे सर्गे श्रद्धाया वर्णने--

मुग्धा यथा मेषशिशुः सहायः प्रभासमाना नयनाभिरामा।
याताप्ययातेव मनो विशन्ती पुष्पान्विता किङ्कलिका वदन्ती॥

नार्याः स्वरूपमत्र विशिष्य विशदं प्रकाशितं कविनामुना।

पुष्पेषु चम्पां सरितासु गङ्गां लज्जावतीं मुग्धलतासु मुग्धाम्।
हंसीं तरत्पक्षिषु शुभ्रवर्णां जानीहि मां त्वं शतरूपनाम्नीम्॥

एतस्मिन् महाकाव्ये प्रतिफलितं जीवनदर्शनं सर्वथा मननीयं सन्देशश्चानुहरणीयः। कविवचसि तत्सर्वमित्थं प्रकटीकर्तुं शक्यते--

भेदा हि यस्याः सकलाः सुविद्याः स्त्रियो गृहाधारशिलासमाश्च
परात्परा सा प्रकृतिस्वरूपा शक्तिः प्रभूयाद् जगतः शिवाय॥

काव्यमिदं सहृदयानां तोषाय स्यादित्याशास्महे।

**- प्रो. राधावल्लभः त्रिपाठी**
कुलपतिः, राष्ट्रिय संस्कृत-संस्थानम्
(मानित-विश्वविद्यालयः) दिल्ली

# विषय-सूची

# पुरोवाक् ( समीक्षा )

अहो! सुरसरिदिवाजस्त्रप्रवाहा धन्या पन्या चेयं देववाणी या चिरन्तनात् कालात् पुरःस्थित-शैलखण्ड-गण्डशैलावलीभिरिव विपरीतस्थिति-कृतबाधाभिर्बाध्यमानापि नवनवैस्तीर्थैरिवाभिनवैः प्रबन्धैरनारतं रसयति रसितमनांसि। वाल्मीकि-रूपाद् गिरिशृङ्गाद् रामायणाकृतिमहाकाव्यरूपा या सरित् सुदूरेऽतीतेऽवतीर्णा भुवि सा विरलप्रचारेऽपि सुरगिरः काले न शुष्यन्त्यधुनापि प्रतिवर्षं देशस्यास्य कोणे कोणे प्रकाश्यमानाभिः कृतिभिःसमद्ध्र्यमाना वर्तते। तस्यामेव परम्परायामर्वाचीनतमं शक्तिविजयं नाम महाकाव्यं संस्कृत-प्रणयिनां प्रमोदाय समुदितम्। अस्य प्रणेता च कविवरो मथुरादत्त-पाण्डेयो नैकशास्त्रविचक्षणः प्राच्य-पाश्चात्त्यदर्शन-पारदृश्वा शास्त्रि-एम.ए.-पी-एच.डी. प्रभृति-नानाविरुदविभूषितो विद्वान् यः स्वकीयप्रतिभागुणैर्देशे विदेशेषु च लब्धप्रतिष्ठो नैकैरात्मोपज्ञै रूपकैः ख्यातचरो रसिक-समाजे सङ्गीतेऽभिनयकलायाञ्च निष्णातो बह्वीभिः संस्थाभिःकाले कालेऽभिनन्दितो महामहिम्ना भारतराष्ट्रपतिना सारस्वत-समृद्धिसंवर्धन-परतामविरतामभिलक्ष्य सादरं सम्मानितः।

**स्वरूपम्** - महाकाव्ये सर्गाणां न्यूनतमा संख्या सप्त मता। अधिकानां नास्ति सीमा। प्रस्तुतं काव्यन्तु द्वादशसर्गेषु विभक्तम्। आदौ च पद्यसप्तकेन शक्तिमाहात्म्यं प्रस्तुतम्। एतेन कविना विवक्षित-वस्तुनिर्देशस्तदात्मकं मङ्गलं चेति एका क्रिया द्वयर्थकरी साधिता।

कविश्चायं स्वाध्यायशीलः साधुविभावित-जगत्-स्थितिश्चेति कालानुरूपं विषयमेव स्वकृत्यर्थं विचिनोति। न कस्यापि विचारशीलस्य यथार्थदृशोऽविदितमिदं यत् सृष्टेरारम्भादेव मत्स्य-न्यायः प्रवर्तते। शक्ततरोऽवहीनं न सहते। धनिनो निर्धनं ग्रसन्ते। जीवन-शक्त्या सत्त्वेन च विरहिता जातयः कालक्रमेण क्षीयमाणाः कालान्तरे स्मृतेरपि अपयान्ति। योग्यतमावशेषः इति सिद्धान्तोऽवितथ एव।

वर्तमानं युगं जना विकासयुगं वदन्ति। केनचिदंशेन मान्यतेयं

तथ्यमेव सिध्यति। विज्ञानसाहाय्येनासम्भावितं वस्त्वपि सम्भवं सिद्धम्। अनेके दुःसाध्या रोगाः स्मृतिशेषाः सुसाध्या वा जाताः। अद्यत्वे बन्ध्या नार्योऽबन्ध्या भवितुं शक्नुवन्ति। पुरुषसंसर्गमन्तरापि नार्योऽपत्यं जनयितुं प्रभवन्ति। चलदूरभाषद्वारेण च वयमत्र भारते स्थिता अपि विश्वस्य कस्मिन्नपि दूरतमे कोणे वर्तमानेन जनेन सहालपितुं शक्नुमः। पुराणोदिता लोकान्तर-यात्रा नाद्य गल्पमात्रम्। देशकालयोरन्तरालञ्चापनीतम्।

काव्यकर्तुरिदमेव भावबीजमस्य निर्माणे यत्सत्यमिदमविस्मार्यं शक्तिरेवात्र जयतीति। राष्ट्रेणास्मदीयेन सर्वथा सर्वदिक्षु च सशक्तेन भवितव्यम्। समाजे पुरुषेण न परम्परामनुरुन्धानेन नारी कथमप्युपेक्ष्याऽऽत्मनो हीनतरा वा बोधव्या। तादृश्यां बुद्धौ हि तस्या अर्द्धाङ्गिनीत्वस्वीकारे किमौचित्यम्? अर्द्धाङ्गविकलो हि जनो रुग्णोऽशक्त एव च भवति। तां मूर्तां शक्तिं स्वीकृत्य सर्वतोभावेन तस्या योगमात्मनो विकासे काङ्क्षन् नियतं पुमानधृष्यतामियात्।

द्वादशसु सर्गेषु प्राधान्येन भगवत्या दुर्गाया एव चरितं कथावस्तुतया प्रस्तुतं यद् दुर्गासप्तशतीगतं कथानकमेवाश्रयति। परं कविर्महाकवेर्बाणभट्टस्य

सन्ति श्वान इवाऽसङ्ख्या जातिभाजो गृहे गृहे।
उत्पादका न बहवः कवयः शरभा इव॥

इति वचनं स्मरन् कथावस्तुनि मौलिकतामाधातुं वैवस्वतमनोश्चरितमपि तेन मिश्रयति। वैवस्वतो मनुः प्रचलतो मन्वन्तरस्याधिष्ठाता, यस्य कथानकं शतपथब्राह्मणेऽपि वर्तते। तत्र तस्य नावोऽवतरणस्थानं मनोरवसर्पणमिति संज्ञयाऽभिहितं भागवते च। स मनुः श्राद्धदेव इत्यपरनाम्नाऽपि स्मृतः। तन् नाम च तस्य पत्नीं श्रद्धासंज्ञामधिकृत्य या कामगोत्रजा कामस्य दुहिता वा निर्दिष्टा, यथा भवस्य पूर्वपत्नी सती दक्षप्रजापतेर्दुहितृत्वेन दाक्षायणीति संज्ञया व्यपदिष्टा, तथैव श्रद्धाऽपि कामायनीति व्यपेदशं गता।

प्रथम-सर्गे च प्रलयावसान आत्मद्वितीयस्य मनोर्हिमशिखरेऽवस्थितिः पश्चात् श्रद्धया सङ्गतिः, तां प्राप्य मनोर्हृदये रागोदयः पुनः सर्गाय चाभिलाष आत्मपरिचयदानानन्तरं अजरामरस्य कस्यापि मुने र्भविष्यकथनानुसारं तस्या नवसर्गाय प्रेरणा, ऋषेरागमनं तत्कृतं मनोः पूर्ववृत्ताख्यानं च वर्णितम्। द्वितीये सर्गे च दुर्गासप्तशतीवदेव कथानकं

प्रस्तुतम्। तृतीये सर्गे देवानां संभूतेन तेजसा महादेव्या उदयो महिषासुरेण चाहवारम्भो वर्णितः। चतुर्थे सर्गे च देव्या ससैन्ये महिषे निहते सति सुरकृतां स्तुतिं निशम्य पुनरपि तद्बाधकानां वधं प्रतिश्रुत्य देव्याः प्रस्थानं वर्णितम्। पञ्चमे सर्गे कवि-कल्पना-प्रसूतस्य मणिद्वीपस्य विस्मापनं वर्णनम्। षष्ठे सर्गे च सृष्टे देवासुरयोर्विभागेऽसुरार्दितानां देवानां रक्षणाय पार्वत्या भुव्यवतरणम्, तस्याः शरीरादद्भुतरूपायाः कौशिक्या उद्भवः, पार्वत्याः कालीरूपेण परिवर्तिताया हिमालयेऽवस्थिति देव्या अपूर्वसौन्दर्यवर्णनं तेनैव च सर्गस्य समाप्तिः। सप्तशत्यां शुम्भनिशुम्भाख्यासुरयुगलत्रासितानां सुराणां स्तुतिं निशम्य द्रुताया भगवत्याः पार्वत्याः शरीरकोशात् कौशिक्या उदयो वर्णितः परमत्रासुरसामान्योदयादेव देव्या आपतनं प्रस्तूयत इति विशेषः। सप्तमे सर्गे सप्तशत्यामिव चण्डमुण्डाख्यासुराभ्यां देव्या अद्भुतसौन्दर्य-दर्शनानन्तरं शुम्भाय चण्डकृतं देवीरूपवर्णनं तन्निशम्य शुम्भकृतं सुग्रीवाख्यदूतप्रेषणं स्वामिना सह तस्याः परिणयप्रस्तावे कृते परिणय-समयादिनिर्धारणाय देव्या असुरशिविर गमननिश्चयः, दैत्यादेशेन च विश्वकर्मणस्तस्या विश्रमायाद्भुत-शिविर- निर्माणं, तेन वृत्तेन च देवानां विषादो देव्याश्च शिविरं प्रति प्रस्थानम् अनेन प्रसंगेन च सर्गावसानम्। अष्टमे सर्गे च दैत्यगुरोः शुक्रस्य शुम्भमुपेत्य देव्या सह परिणयोद्योगं सर्वथाऽनुचितं परिणतौ चाशुभावहं निवेद्य ततो वारणाय यत्नः, देव्याश्च विवाहात्प्राग् वरयितुः शक्तिपरीक्षणमनिवार्यमिति हेतोः समरे विजित्यैव मां परिणेष्यसीति प्रस्तावेन सह शिविरात् प्रतिगमनं वर्णितम्। नवमात् सर्गादेकादशं यावत् समरवर्णनं निशुम्भवधानन्तरं शुम्भस्य वधः, देवकृतस्तुतिं निशम्य तया देवेषु संहत्यभावस्य विपन्मूलत्वान् मिथः संहत्य स्वावलम्बनायानुशासनम् अन्तर्धानञ्चेत्येतावती कथा सर्गत्रये वर्णिता। द्वादशे तु सुरथस्य समाधिना सह देवीमाराधयितुं तपश्चर्या, प्रसन्नया तयाऽऽविर्भूय तस्मै वर-प्रदानं सावर्णिनाम्ना च भूयोऽन्यमन्वन्तरे मनुत्वप्राप्त्यादेश एतेनैव काव्यमिदं समाप्तिमेति।

इत्थं देव्या विजयवर्णन-व्याजेन कविना काव्यस्य नामकरणौचित्यमपि साधितम्।

## रस-परिपाकः

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

इति पद्ये मम्मटेन काव्यनिर्माणानुशीलनस्य विभिन्नानि प्रयोजनानि गणितानि। तेषु यशः काङ्क्षितमपि सोद्देश्यस्याऽकिञ्चित्करम्। उत्कृष्टं चेत् प्रसारं लभमानं तदपि प्रसारयेत्। न च कविरर्थकृशो यदर्थं काव्यरचनायां प्रवर्तेत। कृतायां च तस्यां कस्य च नैवात्रार्थलाभः। चरमे वयसि वर्तमानस्य च न तस्य दृष्टलोकस्य व्यवहारादिज्ञानेन प्रयोजनम्। समाजे स्थितस्य च तस्य नौदासीन्येन परनिर्वृतिलाभे प्रसक्तिः संभवति। वैषम्यपूर्णे नाना समस्याग्रस्ते ससङ्कटेऽशान्तिपूर्णे चास्मिन् काले बुद्धिमता दुःशकं माध्यस्थ्येन जीवितुम्। सति च प्रतिभावैभवे कथं स उदास्तां लोकस्थितिं प्रति। इति जनस्वास्थ्यायोत्थायुकंभावावेगं प्रतिभातांश्चोपायान् प्रकाशयितुं लेखनीं शरणं गच्छति। अतः कान्तासंमित-पदैरुपदेशप्रदानमेव तस्य काव्यनिर्माणं सिध्यति। उपदेशस्य च कान्तासंमितता रसादि-संश्लिष्टतयैव संभवति रसभावादेरेव काव्यात्मत्वेन स्वीकारात्। एतद् विभावयंश्च कविर्यथाप्रसङ्गं संभावित-रसयोजनायां सोद्यमः। अस्य प्रमाणं विविक्त-स्थितस्य भुक्तचरविविधभोगस्य सौन्दर्यप्रतिमां रमणीं विलोक्य तया च विधेर्नियोगेनैवावां सर्वहारिण्यपि प्रलयेऽस्मिन् विनाशादवशिष्टौ नष्टप्रायाया अस्याः सृष्टेः पुनर्निर्माणे कथं प्रवर्तेवहि, इति प्रतिवचनमुखेन तत्प्रणयस्वीकृत्या शृङ्गारस्य योजना कृता। यथाशीर्षकं शक्तेर्विजयस्यैव मुख्यविषयत्वेन प्रतिपाद्यत्वाद् उत्साह एवात्र स्थायी भावः। इति शृङ्गारस्य पूर्णपरिपाकाय नावसरः, महिषस्य शुम्भस्य च देवीं प्रत्येकपक्षीया रतिरेवेति भावाभास एव तत्र प्रतिपत्तुं शक्यते। देव्या स्वरूपस्य मणिद्वीपस्य च स्थितेः प्रस्तवने समरे देव्याः सूक्ष्मधारणे च विस्मयस्योदयोभवतीति तत्राद्भुतस्य परिपाकः साधुः।

प्रलयकालिकी विनाशकरी स्थिति र्नियतं विभीषिकाजनिकेति साधिष्ठा तत्र भयानकस्यानुभूतिः। यथा -

नद्यः क्वचिच्छोणितवारिनाड्यो वीरुल्लताशीर्णशिरोजकाया।
शैलाट्टसंघातविकम्पितैषा चोंद्घातिनी भूरवटैर्विरूपा॥

उत्तालनिम्नीभवदूर्मिघातैः शीतैः क्वचिच्चण्डतमैश्च क्वापि।
कालो ममाङ्गानि निपीड्य यावत् प्राणानिवाचामितुकाम आसीत्॥

अनयोः पद्ययोर्भयानकेन सह वीभत्सस्य मिश्रणं संविद् विषयः।

तथाच

माता क्व याता क्व पिता प्रनष्टो भीतैकला चापि विपद्गताहम्।
उच्चावचेषूर्मिषु घूर्णमाना कथञ्चनात्मानमरक्षमेवम्॥

अत्र पद्ये वर्णिता श्रद्धाया दीनदशा पित्रोरुपरत्या शोकं व्यञ्जयन्ती पाठकस्य मनसि करुणमुद्भावयत्येव। युद्धप्रसङ्गे चोत्साहसूचका उद्गारा वीररसस्यावलम्बनानि। महिषवधप्रसङ्गे च वीरेण सह रौद्रस्य प्रकर्षः। यथासन्दर्भं सुकुमारा परुषाश्च भावाः प्रस्तुताः, महिषस्य कुसुममृदुनि देवी-शरीरेऽनुत्साहस्तां प्रति करुणया सह राग-प्रदर्शनं च शृङ्गाररसाभासस्य हेतू।

भगवतीं प्रति शुम्भस्यापि रागाभिव्यक्तिरहङ्कृतिगर्भा भोगप्रवृत्ति मूला चेति न शुद्ध-प्रणयानुभूतिं भजन्ती शृङ्गाराभासमेव जनयति, तां शुम्भशिविराभिमुखीं विज्ञाय देवानां विषादश्च मनोविज्ञानानुकूल एव। असुरस्य देवीकृतं वरणं हि तेषामाशाकृषौ तुषारपातं कुर्यात्।

**कल्पनोर्वरता** स्वाध्यायपरता, कल्पनाकृतेः कवेर्मस्तिष्कस्योर्वरता च काव्यस्य निपुणपरिशीलनेन प्रकाशमायाताः। देवीभागवतेऽपि महिषस्य भगवतीं प्रति रागो विस्तरेण दर्शितो यथा स तस्या भर्त्सनावचनान्यपि आनुकूल्येन गणयति। कविनाऽपि स भावोऽत्र साधु प्रस्तुतः। दुर्गासप्तशत्यां तु तस्याभाव एव। सा च न काव्यत्वेन गण्यते। पुराणकर्तुः स्वातन्त्र्यमेवात्र प्रभवति। काव्ये रोचकताधाने कवेः संरम्भ एतादृशप्रसङ्गानां योजनया तस्य कौशलमभिव्यनक्ति।

पुनश्च देव्याः शुम्भशिविरगमननिश्चयो विश्वकर्मणः शिविरनिर्माणम-सुराणामुल्लासः, शुक्रस्य शुम्भं देव्या सह परिणयाद् वर्जयितुं यत्नः, युद्धे च वैष्णव्यादि-कन्यकानां वाहनानामपि संभागः, देव्या आत्मस्वरूपस्य सूक्ष्मतापादनमेतत्सर्वं कल्पना-प्रसूतमेव, इत्थमेव मणिद्वीपस्य देव्या अधिष्ठानत्वेन कल्पना भौगोलिकस्थित्या वर्तमानेऽवर्तमानाऽपि पुरा कदाचित् समभवत्। विश्वे हि यदा तदा भूकम्प-सुनामीसदृशाधिभौतिक-हेतुभिःस्थानविशेषाणां लोप उदयश्च

भवति। यथा ख्रिस्ताब्दस्य प्रथम-शताब्द्यां तत ईषत् पूर्वं वा दक्षिणापथे कावेरी-पत्तनाख्यस्य नगरस्य सागरे विलय स्तामिल-ग्रन्थेषु वर्णितः। वेदेषु च भारतस्योत्तरस्यां दिशि कस्यचनाम्बुधेरस्तित्वं वर्णितं न यः साम्प्रतं विद्यते। वृत्तपत्राच्च त्रिविष्टप- समीपे मुस्टांग-नाम्नो श्रुतपूर्वस्य कस्यचन देशस्य स्थितिः प्रकाशमायाता। अतो युगविशेषे मणिद्वीपस्य सत्त्वमपि नासम्भवम्। भारतस्य नैकेषु द्वीपेषु अण्डमानाख्यया ख्यातस्य सत्ता तु सर्वै र्ज्ञायत एव तन्नाम्नोऽणुमणि शब्दस्यापभ्रंश-रूपत्वेन ग्रहणे न किमपि वैरस्यम्। कविना काव्ये तूत्तरस्यां दिशि मणिद्वीपस्थितिर्वर्णिता। उपनिषत्सु पुराणेषु च श्वेतद्वीपस्य चर्चा श्रूयते केचित् तं भारताद् बहिःस्थितं मन्यन्ते। परं काव्य-वर्णिताः शब्दा मणिद्वीपं भारतस्यैव भागे साधयन्ति। भवतु नाम, प्रकृते प्रस्तुतकाव्ये वर्णितं वस्तु यथास्थितत्वेन ग्राह्यं भवति।

यथा पूर्वनिर्दिष्टं, शतपथ-ब्राह्मणे मनोर्नौकातोऽवतरणस्थानं मनोरवसर्पणमित्यभिधया निर्दिष्टम्। यथा वर्णनञ्च मनुस्तन्निकटवर्तिन्यां कन्दरायामेव क्वापि वसतिं करोति। तदधिष्ठानतया च स प्रदेशो मन्वालयत्वेन ख्यात इति पक्षमाश्रित्य कविर्वर्तमाने मनाली-नाम-पर्वतीयं नगरमभिजानाति।

भाषाविज्ञानदृशा च नैतदसमञ्जसम्। एतत् पुरमपि हिमाचलप्रदेशस्याधित्यकायां स्थितं सम्प्रति निदाघतापतप्तैः पर्यटकैः शीतत्वाद्विश्रामस्थलं क्रियते। हिमालयो गिरिराजो हि काश्मीराद् हिमाचल-राज्यमुत्तराखण्डमसमप्रदेशं चाभिव्याप्य तिष्ठति, कविवर्णनमाश्रित्य मणिद्वीपेनापि हिमालयस्यैवैकदेशवर्तिना भवितव्यम्। हिमालय एव हि देव्या अवस्थानं वर्णितम्। तस्या वैष्णवी देवी, चिन्तपूरणी, चन्द्रवदनी, कामाख्यादि शक्तिपीठानि हिमालय एव स्थितानि इति सर्वं सङ्गच्छते।

यथारम्भे निर्दिष्टमासीद् देव्याः कथानकेन सह वैवस्वतमनोरपि कथानकमत्र योजितम्। यथा -

तत्र प्लवाम्भोऽनभिभूतशृङ्गे गिरे स्तदाऽसाववरुह्य नावः।
पश्यन्नवाक् भीममुद-प्रवाहं स्मृति-द्वितीयः समयं निनाय॥

**काव्यबन्धः** - काव्यं यथार्थरूपेण वर्णयोजनारूपं सच् शब्दार्थ

शरीरमाचार्यैर्निरूपितम्, रसभावैर्विचारैश्च तत्र प्राणप्रतिष्ठा विधीयते। यथाप्रसङ्गं मृदु-परुषादिवर्णयोजनयाऽनुरूपेणच्छन्दसा च तत्र श्रव्यता हृद्यता चाधीयते। यथावलेह-संयावादि पदार्थोपस्कृतं भोज्यं मधुराम्लादिरसैः सह कारवेल्ल-सदृशकटु-पदार्थेन परिवेषितेन नोल्वणतां तस्या तनोति तथैव सुकुमारवर्णघटितयाऽसमस्तया समस्तया वा रचनया सह परुषवर्णो-पयोगजनितजटिलबन्धैर्युक्ता कृतिरपि रसावहैव सम्पद्यते। एतत् सत्यं काव्येऽत्रापि लक्ष्यते। कविना बाहुल्येन वैदर्भीरीतिरेवासमस्तप्राया लघु समस्तपदयुता वा प्रयुक्ता।

अनुचितं महिषस्त्वबलां जयेदनुचितं यदि सापि च नो जयेत्।
इति विचिन्त्य रणे युयुधे स किं समुचितो महतो महताह्वः॥

युद्ध-प्रसंङ्गेऽपि योद्धुमनसो द्वैधे स्थितत्वादत्र न समास-योजना। नहि वर्णैर्वीरा-नुरूपौजसोऽभिव्यक्तिः, भावानुशीलनमेव तदनुभावयति।

जटिलबन्धस्तु प्रलयप्रसङ्ग उदाहृतचरः, स्तुत्यादिषु क्वचित् सप्तशत्याश्छायेव प्रतीयते। यथा -

रोगाः प्रयान्ति निखिलास्तव भक्ति-भाजां।
नाशञ्च सौख्यमखिलं द्विषतां तथैव॥

इमे पङ्क्ती - रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान् इति श्लोकार्धेन संवदतः। कविनापि तद्वदेव म्रसृणा पदावली प्रयुक्ता।

· **अलङ्काराः** - अलं वस्तुनो वर्णितस्य प्रत्यक्षकल्पना क्रियतेऽननेति व्युत्पत्त्या शब्दार्थालङ्काराः काव्यस्य प्रगुणतां जनयन्ति। काव्यस्यास्य सन्द्रब्धा जागृविरस्मिन् कर्मणि यत्र तत्र शब्दार्थालङ्कराननायासेन प्रयुङ्क्ते। युद्धप्रसङ्गे केसरिणः शब्दनं घुर्घुरायत इति क्रिययाऽनुकृतं, परं घुर्घुर शब्दः परम्परया सूकरस्य कुक्कुरस्य वा मतो न सिंहस्य इत्यौचित्यं स्मरन् पद्यस्योत्तरार्द्धे -

'युधि जगर्ज चकर्ष च वाहिनीम्' शब्दैर्यथावस्त्वनुसृतम्। अत्र रेफजकारषकाराणां योग ओजोऽनुरूपः। 'विकसिता तु जनी जननी च सा'? अत्र जकार-नकारयोरावृत्ति वृत्त्यनुप्रासिता; न, नी, सा एतेषु दन्त्यवर्णेषु च श्रुत्यनुप्रासः। 'शुभाशुभदर्शिनः' 'हरिहरादि- सुरा'

एतादृशस्थानेषु च्छेकः, अमर-शक्तिजशक्तिररिंदमा अत्र तात्पर्यभेदेन शक्तिशब्दस्यावृत्त्या लाटानुप्रासो जनितः। तथैव -

असुरशोणितपानसमुत्सुका अधर-दंशपराः खलु कन्यकाः
अविरलं विजया-विजयव्रताः सरुषमप्सरसोऽपि समागताः॥

अत्र पादान्तेषु सुकन्यकाः व्रताः गताः इत्यंशेषु चान्त्यानुप्रास-योजना, किटकिटायितदन्तभयावहाः। अत्र तद न त-दन्तकृत किटकिट ध्वनेर्नादचित्रम्। इत्थमेव सुनवनीतसमोपलतां गता अत्र उपमाविरोधाभासयोः संसृष्टिः 'युवति-चित्रपतङ्गगणाश्चला' अत्र रूपकालंकारच्छटा।

कुसुममेक-करे रमणीजनो विषलतामपरत्र बिभर्ति च।
धिगिति यस्त्वबलेतिवदेदिमां जननमृत्युकरीं मदिरां गदेत्॥

अत्र परिकर-विरोधाभास-काव्य-लिङ्गानां सङ्करः।

एला चेन्निहिता मुखे न लशुनोद्गारस्तु निह्नूयते इत्यत्राप्रस्तुतप्रशंसा विशेषोक्तेः संसृष्टिः लोकोक्तिश्च।

**छन्दोयोजना** - कस्मिन् विषये कतमच्छन्दसः प्रयोग इति विषये विषमैव पुराणाचार्याणां दृष्टिः। कामचारोऽपि कवीनां तत्र लक्ष्यते। वर्तमान कवयित्रा चात्मनो विवेकेनैव स्वातन्त्र्येण पन्था अनुसृतः साफल्यं च तत्र दर्शितम्। यथा पुराणकविभिर्ऋतुवर्णनादि-ललित-विषयेषु प्रयुक्तं द्रुतविलम्बितं स्तुतिषु, सुभाषितेषु च लक्षितं शार्दूलविक्रीडितम्, स्तवेष्वेव लोकप्रियं वृत्तं भुजङ्गप्रयातं समरप्रसङ्गे प्रयुक्तं साधु निर्व्यूढञ्च। क्वचिद् हंसयूथं क्वचिद्-बर्हि-पंक्ति इत्यत्र पदानां नृत्यत्प्रायत्वम्।

एतादृश-प्रयोगेण कविना व्यञ्जितं यदतुलवीर्यशालिन्या देव्याः कृत इयमाखेटलीलामात्रमासीन्न तु यथार्थतः समरः। अतएव न तादृश ओजः प्रकर्षो रोषातिशयानुरूपः क्वापि लक्ष्यते। षष्ठे सर्गे मणिद्वीपवर्णने कथावस्तु-प्रवाहाय परम्परागतमनुष्टुप् स्तुतौ च वसन्ततिलका प्रयुक्ते। प्रत्याकामितभावपुष्टये प्रस्तुतास्तकाश्चात्र काव्ये गाम्भीर्यमादधति। यथा-

ओजस्विता स्फुरति नो पुरुषस्य तावद् -
ऊर्जस्वलं न कुरुते भवती तु यावत्।
त्वद्-दत्तदृष्टिरवगच्छति स स्वरूपं
बिम्बं समीक्ष्य मुकुरस्थमिवात्र लोकः॥

अत्र सामान्येन नार्या संधुक्षितस्य पुंसः सत्त्व-बृंहणं लोकसत्यं प्रस्तूयमानं प्रकृतिसङ्गतस्य पुरुषस्यैव पूर्णतां सांख्याभिमतां व्यञ्जयति।

**सन्देशः** – प्रस्तुतकाव्यस्य प्रणेता यस्मिन्युगे वर्तते तदनुगुणैव तस्य जीवनं समाजं राष्ट्रञ्चाधिकृत्य दृष्टिः। मध्यकाले विस्मृतप्रायं नार्या महत्त्वमस्मिन् पुनरुरीक्रियते समाजेन। अतः कविरपि तां पुरुषस्य शक्तिरूपां प्रस्तूय तयैव तस्य पूर्णतां स्वीकरोति। सुचिरादत्र देव्याः पूजने बर्करमहिषादिपशुबलिप्रथा प्रवर्तते शिक्षितसमाजस्य च वैमत्यमेवात्र विषये। अनेकेषु शक्तिपीठेषु चिरन्तनात् कालादनुवर्त्यमानाऽपि साऽधुनावसानं गता। कवयिताऽपि चास्य काव्यस्य मद्य-मांसमयीं पूजां निषेधति। कामं तेन युद्धप्रसङ्गे देवीकृतमसुरासृक्पानं वर्णितं, परं खेदोऽपि तस्यास्तदधिकृत्य प्रकटितः।

'नो वस्तुतोऽभिरुचितं तु ममास्रपानं
तुष्टाऽस्मि नैव बलिभिश्च हितैस्तिरश्चाम्' एतेन पद्येन।

विगतशताब्द्यां द्वे महायुद्धे विश्वेन दृष्टे ययोर्महती जनधनज्या- निर्जाता। कामं शक्तिमत्तानि राष्ट्राणि साम्राज्यप्रसारभावनाग्रस्तानां दुर्मनसां शत्रूणामाक्रमणादात्मरक्षणाय व्यापक-संहार-कारि-भीषणाण्वा- दिशस्त्रास्त्रोपचये रतानि परं' स्वात्मनाश-विभीषिकावशाद् भविष्ये समराणां संभावनायाः सर्वथा लोपोपायानपि चिन्तयन्ति। अस्मिन् विषये चिन्तकानां मतिश्च-यदत्र जगति जनानामर्थलुब्धतैव परस्पर-विरोधमूलम्। शस्त्रादि शक्ति-सज्जास्ते दुर्बलस्य मुखस्थमपि भोज्यं हृत्वाऽऽत्मनः कोशं समर्धयितुकामाः साम्राज्यप्रतिष्ठामभिकामयन्ते। एको देशोऽपरकृतमा- क्रमणमाशङ्कमानः शक्तिसञ्चयं चिकीर्षति। तदर्थं सैन्यस्य विशालतां शस्त्रादीनां संभारञ्चाकांक्षन् प्रजानां हिताय विनियोज्यं द्रव्यं तत्रोपयुङ्क्ते।

पुरातने काले समाजे विनिमयप्रथायां वर्तमानायां जना अपेक्षित वस्तूनि परेभ्योऽन्यवस्तुविनिमयेन गृहीत्वा प्रयोजनं साधयन्ति स्म। अनेन विधिना विनापि द्रव्यं तेषामपेक्षापूर्तिरसिद्ध्यत न च कश्चनाभावस्तानबाधत। एतेन न तैर्दारिद्र्यमनुभूतम्। सर्वस्मिन् संव्यवहारे मुद्रामात्रसाध्ये जाते समाजे भावाभाववतोः श्रेणिद्वयमुत्पन्नम्। एतद् वैषम्यं लोके मिथो विद्वेषं संघर्षमशान्तिमविश्वासञ्चाजीजनत्। लोभासूयामात्सर्यसदृशा भावाः

प्रबलाः सन्तस्तस्करतां लुण्ठनं सङ्ग्रहवृत्तिं चावीवृधन्। एकस्मिन्नपि देशेऽनेकेषां राज्यानां प्रतिष्ठा च सीमाविवादैः सह तद्विस्तारप्रवृत्तिमुदभावयत्, शनैः-शनैरन्यदेशान् विजित्य तेषां शोषणेनात्मपोषणवृत्तिरपि प्रसृता।

अतः कैश्चिद् विचारकै र्भविष्ये युद्धसंभावनोन्मूलनाय बहव उपायाश्चिन्तिता येषामन्यतमो विश्वस्मिन् विश्व एकराष्ट्रस्थापना। प्रस्तुतकाव्यप्रणेतुरपि तत्र स्वारस्यं वर्तते यद् द्वादशे सर्गे देवीवचनमुखेन तेन स्फुटतां नीतम्। समस्तेऽपि भूमण्डलेऽनन्यराष्ट्रस्थितौ तदन्तः पातिनां देशानाञ्च प्रान्तमात्रत्वे जाते स्वतन्त्रसैन्याभावेन कुतो युद्धसंभावना स्यात्! समाजे लक्ष्यमाणोऽसन्तोषो विग्रहश्च वैषम्यकृतान्नादीनां जीवनोपकरणानां समाने वितरणे सति वैषम्याभावयोरेवोन्मूलनं जायेत। वस्तुविनिमयेनापेक्षापूर्तौ सत्यां कुतोऽभावस्यानुभवः! सन्तोषे च सति न दारिद्रयभावः। इत्थं विश्वशान्तेः स्थापनायै प्रयतनं कविना सन्दिश्यते। देव्याः संहत्याय देवानामनुशासनं प्रस्तुवन् कविः संघशक्तिमेव प्रचेयां प्रस्तौति, अद्यत्वे विश्वशान्तिस्थापनामुद्दिश्य कृता संयुक्त-राष्ट्रसंघे प्रतिष्ठा बलवत्तराणां राष्ट्राणां प्रभावे स्थिता सती निष्फलैव। तस्य स्वतन्त्रसैन्याभावान् न स क्वापि प्रवृत्तं सङ्गरं निरोद्धुंक्षमः। एतत् तथ्यं प्रत्यक्षीकुर्वन् कविरेतत्काव्यमुखेन स्वविमर्शं लोकक्षेमाय प्रस्तौति।

इयं विश्वराष्ट्रकल्पना च न दिवा-स्वप्नत्वेन बोध्या। काव्यकल्पनाः कदापि वितथा न भवन्ति।

भवन्ति नोद्दामगिरां कवीनामुच्छ्राय सौन्दर्यगुणा मृषोद्याः।

महाकवे र्माघस्य सदुक्तिरियं न जातु दुरुक्तिर्भवितुमर्हति। कवि र्हि नैतिह्यकृदिव घटितमेव सत्यं स्वकृतौ निबध्नाति। न हि कवेरितिवृत्तमात्रनिर्वहणमात्रेण कवित्वलाभः इतिहासादेरेव तस्य सिद्धेः। तत्कृतं काव्यं तु सत्येन सह शिवं सुन्दरस्थं भवतीति तस्यैतिह्याद् विशेषः। 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति गीता-वचनं हृदये निधाय यन्मङ्गलं स्थायि च तदेव सत्यम्। इतिहासकारदृशि यथास्थितं वस्त्वेव सत्यम्। कवेर्दृष्टि स्तु सम्भावनायां संरम्भात् तेन कीदृशेन युक्तेन भवितव्यम् इत्यत्र निहिता भवति। कीदृशेन इतिपदञ्च नियतं शिवं सुन्दरञ्चापि निर्दिशति। स आदर्शमेव यथार्थत्वेनोपस्थापयति निदर्शनार्थं काव्येऽस्मिन् कविना मणिद्वीपस्य या सामाजिकी राजनैतिकी च स्थिति

र्वर्णिता तस्यै को न स्पृहयेत् स्वराष्ट्रे! अतः सा कवेरादर्शरूपेणैव ज्ञेया। महाभारतादिषु पुराणग्रन्थेषु निदर्शिता भूयस्यो घटनाः श्रुत्वा प्रायो जनाः सर्वथा कल्पिता असम्भवाश्च घोषयन्त उपहसन्ति स्म। विमानानां लोकान्तर-यात्राणां वर्णनञ्च प्रथमवारं तेष्वेव लभ्यते स्म। अद्य तत्सर्वं प्रत्यक्षीक्रियते। पुरुषसङ्गं विना नार्याः सन्तति-प्रसवः सर्वथाऽसंभव इति वदन्तो ये सप्रौढि कादम्बर्यां वर्णितं लक्ष्म्या मानवसहवासमात्रेण जातं पुण्डरीकस्य जन्मोपहसन्ति स्म। तेऽधुना नलिका-प्रसूतानां शिशूनां विषये किं वदेयुः? शल्यक्रियया पुंसां स्त्रीत्वे परिवर्तनं तेषां गर्भधारणं च वृत्तपत्रेषु प्रचार्यमाणं पठित्वा किं शिरो धुन्वन्ति? संयुक्तराष्ट्रसंघस्य स्थापनाया निदानं मूलरूपेण विश्वराष्ट्रकल्पनैवासीदिति तथ्यमपि नापलपितुं शक्यते। प्रत्येकं यथार्थीभूतं नवं वस्तु पूर्वं कल्पनैव भवतीति सत्यं न विस्मरद्भिः सर्वं समञ्जसत्वेनैव ग्राह्यम्। कालान्तरे यथार्थे परिणमेत्तत्।

काव्येऽत्र क्वचित् सन्धेरभावः शब्देषु संस्कार-शैथिल्यं च लक्ष्येते। तत्रानेके हेतवः संभवन्ति। प्रथमम्, अद्यत्वे जनानां सन्धेः शैथिल्यं प्रत्याग्रहः। सन्धयः समासाश्चापि भाषां क्लिष्टां विदधति। समासादति रिक्तस्थलेषु लक्षितः सन्ध्यभावश्च 'वाक्ये विवक्षामपेक्षते' इत्यभियुक्तेरनुमतोऽपि। काव्ये च स प्रायेण पादान्तेषु लभ्यते न मध्ये। एकत्र घुरघरायत इति प्रयोगश्चिन्त्यो भूतार्थक्रियायामडागमस्यापेक्षितत्वात्। कवेर्दृष्टिस्तत्र नादानुकृतिमात्रे निहिता। अत एव स उपेक्षितः।

अन्ते च वर्तमाने देवगिरं प्रति माध्यस्थ्यं भजति समाजे तस्या भाण्डागार-संवर्धनहेवाकिन एतत्प्रबन्धसन्दृब्धि-द्वारेण लोकशिवकामनां सन्दिशतः कवेरस्य प्रशस्यं प्रयासमिमं गुणगृह्याः सहृदयाः सादरं सरुचि चाभिनन्दिष्यन्तीत्याशासानस्तदीय-समीहितपूर्तिमक्षुण्णयशोभाजनताञ्च कामयमानो विरमति मुधातिपल्लवनात्।

विदुषामाश्रवः
शिवप्रसादो भारद्वाजः
(राष्ट्रपति-पुरस्कारेण सम्मानितः)
(पंजाब विश्वविद्यालयीयो भूतपूर्वाचार्यः)
आचार्य, एम.ए. (द्वय), डी.लिट्. प्रभृति पदवीविभूषितः

# AN APPRECIATION

It gives me immense pleasure to write about Dr. M.D. Pandey's latest contribution to the world of Modern Sanskrit literature, a *mahākāvya* titled '*Śaktivijayam*'. Dr. Pandey is an eminent poet and dramatist having won quite a few awards including the coveted President's Award for Sanskrit Scholars and literature. What sets him apart from other writers is the amalgamation of qualities such as erudition of a scholar, sensitivity and musicality of a poet, and imagination and vision of a profound practical philosopher, which he brings to bear in his writings, more so in the present work.

*Śaktivijayam* is a modern epic apparently woven around the exploits and conquests of Śakti, the goddess Durgā, mentioned in our ancient scriptures, who appeared in various avatāras to overpower and bring to submission evil in the shape of demons and devils and give succour to her supplicants and devotees. She is regarded as the universal Mother, powerful as also benign, represents Nature which can be cruel and yet be kind and compassionate.

Myths and stories about Śakti are found in abundance in Purāṇic literature, but the writer has drawn upon them to explore and imaginatively reconstruct them for the purpose of correlating them with the modern malice. They are symbolic of the wickedness, corruption, injustice barbarian lack of ethics and consequent unrest that afflict our present day society to bring about a transformation of this society and establish a kingdom where justice, peace and prosperity reign – a Heaven on earth.

All this sounds utopian, but Dr. Pandey has visualized the possibilities in the scripture wherein he finds mention of an island in the Himālayas, Manidvipa a fascinating beautiful,

other-worldly destination administered by Devi. Here we find absolute peace and harmony, sweet reasonableness and purity of purpose.

The country is like a commune where nobody owns anything, people work for each other's welfare and comfort and material values are discarded. Devī wishes to have a global Government on the same lines and instructs Manu to work for the establishment of such a Government. It is perhaps a fond dream of the poet, but he believes that woman who is mother, wife, daughter has the innate ability and nature to harmonize the disparate elements of the world and lead humanity out of chaos and confusion towards the cherished goal of universal peace and happiness.

The Mahākāvya has sought to depict it's story in vivid details in twelve cantos with the fervour of the devotee in the author all too palpable in them. The story offers enough scope to the poet in the author for his flight of imagination. What would have happened at the time of Dissolution (*Pralaya*), what destruction and desolation it would have wrought, how the missiles of Devī and Mahiṣa would have flown thick and fast cancelling each other out required of him an uncanny insight that he brings to bear in his descriptions. The expression moves with the action, scaling up and down with its flow and ebb

The Mahākāvya is defined as a composition that is divided in cantos whose number has got to be more than eight: *sargabandho mahākāvyam sarga aṣṭottarā iha.* The Mahākāvya under reference answers this definition in full. It has twelve contos. It also answers the definition that it should describe the story of a king or a noble personality or a divine being. It is the divinity, the Mahāśakti that is described here. That it does not answer is the principal sentiment, the *aṅgī rasa,* which according to texts on Poetics should be either Erotic or Heroic, *Śṛṅgāro vīra eva va.* The principal sentiment is here Bhakti, Devotion, which though not earlier accepted *rasa* was assigned the character of it by such celebrities as Rupagosvamin.

In this composition of 694 verses the author has used as many as 15 metres, some of them as demanding as Drutavilambita, Śārdūlavikrīḍita, Vasantatilakā, Mandākrantā, Bhujaṅgaprayāta and so on. The verses are marked by easy flow and raciness. So are they marked by alliteration in all its varieties which produces a jingling effect. There is profusion of Similes, Metaphors, Fancies and a host of other figures of speech. All this makes the work very enjoyable and readable, a real treat to connoisseurs. It will go down, for sure, as a great addition to the ever growing modern Sanskrit literature. Its author Dr. Mathura Datt Pandey deserves full plaudits for producing a work of art which is a joy for ever.

New Delhi
14.6.2010

Satya Vrat Shastri
*First Recipient of Jnanpith Award in Sanskrit, Padmabhushan and President of India Certificate of Honour*

# प्रस्तावना

संस्कृत-काव्य की कवि-कृत प्रस्तावना हिन्दी में– यह एक प्रश्न उपस्थित करता है कि संस्कृत में वह क्यों नहीं लिखी गयी? उत्तर में कहा जाता है कि संस्कृत श्लोकों का हिन्दी में अर्थ दिया गया है, उन पाठकों के लिए जो संस्कृतानुरागी तो हैं; किन्तु विधिवत् जिनको संस्कृत की शिक्षा नहीं मिली है तो उन्हें कवि का मन्तव्य समझाना भी आवश्यक है। संस्कृतज्ञों को समझाने के लिए सम्मान्य विद्वान् डॉ. शिवप्रसाद भारद्वाज ने समीक्षात्मक पुरोवाक् लिख दिया है।

अस्तु, 'शक्तिविजयम्' की कथावस्तु न सर्वथा उत्पाद्य है और न पूर्णतः प्रख्यात ही। यह एक मिश्रकथात्मक काव्य है। इसे आधुनिक महाकाव्य कहा जा सकता है। देवी, जिसे विष्णुमाया, सरस्वती, लक्ष्मी, पार्वती, महामाया, महामोहा, योगनिद्रा, महेश्वरी, आद्य प्रकृति आदि नामों से भक्तों ने पुकारा, मेरी आराध्या है।

विश्व की शक्तिशालिनी माँ? उसका चरित्र लिखकर मैं प्रमुख उद्देश्य के रूप में पुत्र के कर्तव्य को निभा रहा हूँ। प्रकारान्तर से शक्ति अर्थात् पराक्रम की महिमा बताना भी अभीष्ट है। इसके अतिरिक्त प्राचीन नारी-राज्य के जो संकेत निगमागमों में मिले, उनके आधार पर उसके व्यवस्थित रूप की उद्भावना तथा उससे आधुनिक समाज को नारीशक्ति का अभिज्ञान करवाना भी अपना उद्देश्य रहा और यह कामना भी, जिसे भले ही कोई मेरा कल्पनाविहार माने, कि सामाजिक स्वास्थ्य तथा विश्वशान्ति के लिए विश्व-सरकार की स्थापना को उजागर करूँ। मानवता की विजय तथा तज्जनित निराक्रान्त शान्ति-स्थापना के सुख-स्वप्न का दिग्दर्शन भी इस काव्य का अभीष्ट लक्ष्य है।

इसमें देवी द्वारा मानवता के विकास तथा योगक्षेम को दिखाने

के लिए मार्कण्डेय पुराणागत महाराज सुरथ, पुनर्जात सूर्यपुत्र मनु को देवी का कृपाभाजन सिद्ध किया गया है।

निगमागम में उल्लिखित चौदह भुवनों को उनके नामों के आधार पर प्राचीन ग्रन्थों के अनुसार वर्तमान भूगोल-खगोल को टटोलकर इसमें इसी धरती पर खोजने का प्रयास किया गया है।

भूलोक के रूप में देवी-भागवत में वर्णित (द्रष्टव्य - देवीभागवत स्कन्ध 5 अ. 20 श्लोक 17, 21) शत्रुघ्न के राज्य को, जिसकी राजधानी अयोध्या रही, लेकर हम उत्तर दिशा की ओर बढ़े हैं। भुवः स्थान भूटान रहा। उससे ऊपर स्वर्ग है। त्रिविष्टप (तिब्बत) उसका पर्यायवाची है। तिब्बत मेरी दृष्टि में प्राचीन स्वर्ग है। ब्रह्मलोक से ब्रह्मपुत्र प्रवाहित होता है। हिमालयस्थ कैलास शिव का वासस्थान है तथा जो श्वेत-द्वीप से ख्यात रहा और जहाँ देवीभागवत के अनुसार नारायण का तपस्या-स्थल है, वह बद्रीनाथ धाम है।

पुरा सत्ययुगे राजन् विष्णुर्नारायणः स्वयम्।
श्वेतद्वीपं समासाद्य चकार विपुलं तपः॥ (5.33 दे.भा.)

इन्द्रलोक भी कुछ ऊँची जगह पर स्थित रहा, जहाँ से वज्र चलाकर इन्द्र ने मैनाक को भगाया। उसकी सेना का शिविर 'इन्दरसेन' के नाम से लाहुलस्फीती में आज भी माना जाता है। स्वर्ग से ऊपर मह, जन, तप, सत्य लोक साईबेरिया का मैदान पार कर उत्तरी-ध्रुव तक फैले लगते हैं। देवयोनि-विशेषों का किन्नर लोक किन्नौर, यक्षों की अक्षय कोषवाली पुरी अलकापुरी जहाँ से अलकनन्दा निकलती है, आज भी विद्यमान हैं। नेपाल को कन्दर्प किंवा गन्धर्व लोक कहा जाता है। रूप कुन्त (कुण्ड) गन्धमादन पर्वत, उर्वशी कुण्ड उन्हीं नामों से पुकारे जाते हैं, जिन नामों से वे पहले पुकारे जाते थे। पाण्डव स्वर्ग जाने के लिए हिमालय की ओर ही बढ़े थे। चार भाई तो हिम में ही दब जाते हैं। केवल युधिष्ठिर ही पहाड़ी कुत्ते के साथ वहाँ पहुँच पाते हैं। यहीं कहीं मणिद्वीप रहा जहाँ देवी का शासन चलता था। सभी स्त्रियाँ! पुरुषों की स्थिति के संकेत तो मिलते हैं, किन्तु ग्रन्थ उन्हें स्त्री-रूप धारण किये दिखाते हैं। उदाहरणार्थ : ब्रह्मा, विष्णु, महेश स्त्री बनकर क्रमशः उत्पादन, परिरक्षण, दण्ड-दान का काम करते हैं।

पूर्वं मया ते कथितं मणिद्वीपं मनोहरम्।
क्रीडास्थानं महादेव्या वल्लभं परमं स्मृतम्॥
यत्र ब्रह्मा, हरिः स्थाणुः स्त्रीभावं तु प्रपेदिरे।
पुरुषत्वं पुनः प्राप्य स्वानि कार्याणि चक्रिरे॥

देवीभागवत 5.20.17

देवी का राज्य तो दूर-दूर तक था। उसका किला नन्दाकोट था, जहाँ वह नन्दादेवी नाम से प्रसिद्ध थी। अन्नपूर्णा की चोटी भी देवी के नाम से ख्यात है। उत्तर गढ़वाल की पर्वतश्रेणियों के मध्य रहने वाली जाति 'मारछा' कही जाती है। वह 'उमा रक्ष्या' शब्द का अपभ्रंश लगता है जिसका अर्थ है उमा द्वारा रक्ष्य (आदि स्वर लुप्त)।

देवी का विहार-स्थल मणिद्वीप था। लगता है कि पुंरुषों के लिए यह अगम्य द्वीप था। ब्रह्मा, विष्णु, महेश का स्त्री रूप में रहने का तात्पर्य है कि ये पद थे, पुरुष के अभिधान नहीं। मणिमहेश— लगता है कि मणिद्वीप का आराध्य शिव था जो वर्णन मणिद्वीप का मिलता है, उससे लगता है कि वह एक रमणीक स्थान था—

यः सुधासिन्धुमध्येऽस्ति द्वीपः परमशोभनः।
नानारूपैः सदा तत्र विहारं कुरुतेऽम्बिका॥

देवीभागवत 5.20.18

देवीभागवत के अनुसार यह स्थान वर्तमान हिमालय में स्थित था। वहीं जाकर देवी-पूजन का आदेश दिया गया है।

तस्माद्धिमाचले गत्वा पर्वते सुमनोहरे।
आराधनं चण्डिकायाः कुरुध्वं प्रेमपूर्वकम्॥

देवीभागवत 5.22.16

तस्मिञ्छैले सदा देवी तिष्ठतीति मया श्रुतम्
उस पर्वत में देवी सदा विराजमान रहती है— ऐसा मैंने सुना है।

देवीभागवत 5.22.20

मार्कण्डेय पुराण भी उसे 'हिमाचल संस्थिता' कहता है। हिमाचल में द्वीप कैसा? यह शंका निर्मूल है क्योंकि देवी का यह वृत्तान्त दूसरे मन्वन्तर स्वारोचिष का है। तब हिमाचल में समुद्र था। उसी के बीच दो-तीन द्वीप थे।

(द्रष्टव्य - जियोलोजी ऑफ़ इण्डिया - डी.एन. वाडिया तथा सेण्ट्रल हिमालयाज़ - ले. आर्नोल्ड हाइम ए. गैन्सॅर)

पर्वत पर कैसा द्वीप? इसी शंका से संभवतः कुछ लोगों ने जापान को मणिद्वीप और अण्डमान को अणुमणिद्वीप माना है, जो प्रमाण-पुष्ट नहीं है। वस्तुतः हिमालय समुद्र-गर्भ से ही उद्भूत हुआ है। जलमध्य समायी पर्वतश्रेणियाँ भूकम्पादि कारणों से उभर आयीं। पानी का प्रवाह मन्द पड़ा। समुद्र का कचरा इकट्ठा हुआ जिससे विचित्र प्राणी पैदा हुए। विलक्षण वनस्पति एवं विशाल भूधर अस्तित्व में आ गये। मधु-कैटभ दैत्यों को विष्णु के कानों की मैल से उपजा माना जाता है। विष्णु जल का दूसरा नाम है। वह केशव है अर्थात् जल में सोने वाला देव है। समुद्र के एक कोने (कर्ण) से पैदा दैत्य विष्णु कर्ण-मलोद्भूत कहे गये। पहली लड़ाई दैत्यों और देवों के बीच तभी शुरू होती है। मधु-कैटभ ब्रह्मादि देवताओं को सताते हैं। रक्षक विष्णु जल-मध्य शेष का आधार लेकर सोये पड़े हैं। तब निद्राधिष्ठात्री देवी-देवताओं द्वारा स्तुति किये जाने पर विष्णु को उठाती है। जब लड़ते-लड़ते विष्णु थक गये और दैत्य नहीं मरे, तब देवी महामाया दैत्यों की बुद्धि का ह्रास करती है और विष्णु द्वारा उन्हें मरवाती है। निष्कर्ष यह है कि हिमालय के स्थान पर पहले जल था। बीच बीच में धरती के उभर आने से मणिद्वीप, श्वेतद्वीप आदि भूभागों की सृष्टि हुई (द्रष्टव्य - जियोलोजी ऑफ़ इण्डिया - डी.एन. वाडिया, पृ. 170)

मणिद्वीप की शासिका देवी की उत्पत्ति, उसके स्वरूप आदि के विषय में शास्त्रीय तथा कल्पित निम्नलिखित बातें ज्ञातव्य हैं—

1. ऋग्वेद के दशम मण्डल के एक सौ सत्ताइसवें सूक्त के एक से आठ मन्त्रों में देवी को चित् शक्ति स्वरूप रात के रूप में छाई हुई दिखाया है। सारा विश्व सृष्टि से पहले उसी अन्धकार में विलीन है।

2. देवी पुराण में उसे ब्रह्ममाया स्वरूप रात्रि की अधिष्ठात्री कहा गया है।

3. तन्त्रोक्त रात्रिसूत्र में उसे विश्व को पैदा करने, पालने तथा मिटाने वाली अतुल पराक्रमी विष्णु की 'नींद' कहा गया है। ब्रह्मा उसे प्रकृति कहते हैं। जो भी दृश्यादृश्य जगत् है, उसकी शक्ति के रूप में वे इस सूक्त में देवी के स्वरूप को दिखाते हैं।

4. अथर्ववेद में देवी स्वयं अपने स्वरूप को स्पष्ट करते हुए कहती है— 'मैं ब्रह्मरूपिणी हूँ। प्रकृति और पुरुष मुझ से ही उत्पन्न हुए। सदसत् (शून्याशून्य) मेरी उपज है।'

मार्कण्डेय पुराणान्तर्गत दुर्गा सप्तशती पंचम अध्याय में उसे

'या देवी सर्वभूतेषु चेतनेत्यभिधीयते।

नमस्तस्यै, नमस्तस्यै, नमस्तस्यै नमो नमः।' कहकर समस्त प्राणियों की चेतना माना गया है।

5. प्राधानिक रहस्य में उसे 'सर्वस्याद्या' कहा गया है। उसके अनेक अवतार गिनाये गये हैं।

देवी के जो अवतार तथा नाम गिनाये गये हैं, उनमें शक्ति और मातृरूप विशेषतः विचारणीय हैं क्योंकि हर अवतार में वह सशक्त माँ देखी जाती है। देवी की स्तुति करते हुए देवता प्रश्न द्वारा उसकी महत्ता दिखाते हैं—

दृष्ट्वैव किं न भवती प्रकरोति भस्म?

आप शत्रुओं को वक्रदृष्टि से देखकर ही भस्म क्यों नहीं करती हैं? स्वयं खोजकर उत्तर देते हैं कि युद्ध में शस्त्र से कटकर निष्पाप होकर वे स्वर्ग-लाभ करें, इस विचार से तुम उन्हें मारती हो। तो देवी का यह रूप ही क्या सर्वत्र देखा गया है? निश्चित रूप से शत्रुओं का संहार कर वह खुश नहीं होती है। महिषासुर के मरने पर वह विशेष रूप से विषण्ण देखी जाती है। वह मदिरापान क्यों करती है? इसलिए कि रक्तबीज के रक्त को जो पीना था। उसके रक्त की एक-एक बूँद से एक-एक असुर पैदा हो रहा था। चामुण्डा को आदेश देती है-'अम्बिके, विस्तीर्णं वदनं कुरु' (दुर्गा सप्तशती) मुँह फैलाओ। मैं काटूँगी उसे, तू (चामुण्डा) उसके खून को पीती रह। तभी दैत्य का नाश होगा। परन्तु युद्ध जीत लेने पर अपने असुर-पुत्रों के विनाश पर वह प्रसन्न नहीं होती। उसका मातृत्व उसे खेद से भर देता है। मैंने देवी के इसी भाव को प्रकट करने के लिए उसके मदिरापान को उचित एवं विवशता-भरा दिखाया है। काव्य में सोचती दिखाई देती है कि वह पागलपन उसमें कैसे नाच करे कि माँ होते हुए भी उससे पुत्रों का संहार किया जा सके। फलतः वह

मधुपान करेगी। शान्ति के समय वह रक्तपान तथा मदिरापान की निन्दा करती है।

पौराणिक परिवेश में देवी की छवि हृदयस्थ करने के बाद मुझे काव्योपयोगिनी वीर माँ को चित्रित करने का अवसर मिल गया। वह शक्ति है अर्थात् शक्तिपुंज है। वह सुन्दरी है, शुम्भ उसे स्त्रीरत्न मानकर उससे शादी करना चाहता है। देवी उस त्रिलोकजयी शुम्भ को अकिञ्चन मानकर प्रस्ताव को इस शर्त पर मान लेती है कि लड़ाई में यदि वह उसे हरा दे तो वह शादी कर लेगी। कहाँ कोमलांगी अकेली रमणी, कहाँ वीर-शिरोमणि शुम्भ! शेर का बच्चा है क्या? जो मदस्रावी गजराज पर झपटना चाहता है। पर जो हुआ, उससे दैत्यों के छक्के छूट गये। ख्यात वृत्त में भले ही वह जादुई खेल लगे। मैंने उस वृत्तान्त को सम्भाव्यता की तराजू पर तोल कर सत्य की ओर झुकाने का प्रयत्न किया है। कहाँ तक सफलता मिली है, यह पाठक निश्चित करेंगे।

शुम्भ देवी से कहता है कि वह दूसरों के बल पर लड़ रही है। उसे बहुत-सी देव-शक्तियाँ लड़ती दिखाई दे रही हैं। इस पर सारी शक्तियाँ मुख्य देवी में समाविष्ट हो जाती हैं और वह शुम्भ से कहती है—

> एकैवाहं जगत्यत्र द्वितीया का ममापरा।
> पश्यैता दुष्ट मय्येव विशन्ति मद्विभूतयः॥

(मैं अकेली हूँ। यहाँ दूसरी कौन है? दुष्ट, ये सारी मेरी विभूतियाँ मुझमें प्रवेश कर रही हैं।) यह एक वैज्ञानिक तथा योगसिद्ध चमत्कार था कि पंचतत्त्वों की तन्मात्रात्मक स्थिति में आकार का विलयन दिखा दिया। रूप मुख्यतः पृथ्वी तत्त्व से निष्पन्न होता है। शेष तत्त्वों में उत्तरोत्तर रूप सूक्ष्म से सूक्ष्मतर होता हुआ आकाश में विलुप्त हो जाता है। केवल उसका गुण (तन्मात्रा) शब्द शेष रहता है। क्षिति-जल-पावक-समीर-गगन की तन्मात्रायें हैं— गन्ध-रस-रूप -स्पर्श तथा शब्द। ये अच्छेद्य, अक्लेद्य, अदाह्य एवं अवध्य हैं। अणिमा (छोटे-से-छोटा बन जाना), महिमा (बड़े से बड़ा बन जाना) आदि सिद्धियाँ तथा कोशिकाओं से नये रूप धारण करना उस समय प्रायः थोड़ा-बहुत सबको आता रहा होगा कि महिषासुर कभी आदमी

कभी भैंसा कभी कुछ और बन जाता था। देवी की कोशिका से देखते-देखते कौशिकी पैदा हुई। आँखों में पार्वती का काला रंग बदला कि वह भयानक कालिका बनी। मैंने देवियों के गले में एक बीज लटका दिया है जिसे मुँह के भीतर रखते ही वे अदृश्य हो जाती हैं। फलतः हाथ नहीं दिखाई देता। शत्रु के सिर पर पड़ती हुई तलवार ही दिखाई पड़ती है। शत्रुओं को नोचती हुई रंग-बिरंगी तितलियों तथा देवगणों के वाहनों की सेना की आवाजाही रोबोटों की सेना की तरह निर्भीक चल रही होती है। देववाहिनी के लिए सिद्धिप्रद बने हैं पलायन करने वाले घर के चूहे।

दैत्य अचम्भित हैं देवी से प्रेरणा प्राप्त करने से पहले के भगौड़े देवों की लड़ती हुई सेना को देखकर। शक्तिशालिनी देवी की फटकार देवताओं में जान फूँक देती है। जहाँ शक्ति वहाँ विजय! शक्ति का विवाह सामर्थ्य से होगा तो विजय बेटे का जन्म भी होगा ही। निर्बल का कोई नहीं। सबलता लिङ्गनिरपेक्ष होती है। उपदेश तथा शासन शक्ति का चलता है। राष्ट्रों का उत्थान-पतन का इतिहास शक्ति के उत्थान और अवसान का इतिहास है। देवी-चरित्र से मेरा यह कथ्य भी प्रकट हुआ है इस काव्य में। इस तरह शक्तिविजय काव्य देवी- विजय की कथा को ही नहीं, पराक्रम के महत्त्व को दिखाने वाला रूपक काव्य बन जाता है।

आधार ग्रन्थों में देवी शुम्भ की खिल्ली उड़ाने के लिए यह तो कहती है कि जो मुझे युद्ध में हरायेगा, उससे विवाह करूँगी, परन्तु वह कहीं भी शुम्भ के प्रस्ताव को स्वीकार करने को तैयार नहीं। मुझे कौतूहल को चरमावस्था पर ले जाने के लिए देवी को शुम्भ के शिविर भेजना पड़ा और प्रस्ताव पर विचार करने को उद्यत दिखाना पड़ा जिससे कुछ समय देवताओं की घिग्घी बँध गई। नारी की सार्वभौम सत्ता की स्वीकृति तथा उसके शुभाशुभ रूपों को दिखाने के लिए मुझे शुक्राचार्य की उपस्थिति करनी पड़ी है। दैत्य-गुरु तक देवी के मातृ- रूप के महत्त्व को खुले दिल से स्वीकारते हैं, परन्तु उसके प्रेयसी रूप की सराहना करने में अपनी कृपणता को नहीं छिपा पाते। उसका वासनापरक उपयोग करने की निन्दा करते वे

अघाते नहीं। गुरु की फटकार इसी बात को लेकर शुम्भ के लिए कँटीली चुभन बन जाती है जिसकी परवाह न करता हुआ वह अपने अंत समय तक भी उसकी वेदना से ग्रस्त रहता है।

अंतिम कथांश के नायक-नायिका मनु-दम्पति से प्रारम्भ में ही पाठकों की भेंट करवा कर मैंने छः मन्वन्तरों के विशाल अन्तरालस्थ वस्तु की छिपी लम्बाई की, जिसमें सुरथ के देवी-वरदान प्राप्ति तथा मनु बनने के रूप में उसके फलीभूत होने का दीर्घ समय समाहित है, अरुन्तुदता को कम से कम करने का प्रयत्न किया है। प्रारम्भ में मनु, अन्त में भी मनु, फिर भी वह काव्य में पीठमर्द नायक ही बन पाया है। वह देवी की वरदान-शक्ति का उद्‌भावक है।

'शक्ति-विजयम्' के कथानक का कङ्काल मूलतः देवीभागवत तथा मार्कण्डेय पुराण से लिया गया है। इसमें स्वारोचिष मन्वन्तर में पैदा हुए महाराज सुरथ के राज्य के कोलाविध्वंसियों द्वारा हड़पने पर उसके वन जाने, वहाँ समाधि नामक वैश्य के मिलने तथा मेधा ऋषि की शरण जाकर देवी-वृत्तान्त सुनने एवं उनसे देवीशरण जाने के लिए सुझाव मिलने पर वन जाकर तपस्या करने तथा देवी से यह वर प्राप्त करने पर कि राजा सुरथ अपने राज्य को पुनः प्राप्त करेगा और सूर्य-पुत्र के रूप में जन्म लेकर आठवाँ मनु बनेगा, वस्तु समाप्त हो जाती है।

स्वारोचिष मन्वन्तर दूसरा मन्वन्तर है। आजकल वैवस्वत नामक सातवाँ मन्वन्तर है। एक मनु का काल 12000 देववर्षों अर्थात् 432000 मानववर्षों का होता है। यह काल ब्रह्मा का 1/14 दिन के बराबर होता है। 14 मन्वन्तरों के बाद अर्थात् 71 महायुगों के बीतने पर ब्रह्मा का एक दिन माना जाता है। विवस्वान् अर्थात् सूर्य की दो पत्नियाँ थीं – सरण्यू या संज्ञा तथा छाया। सरण्यू की दो सन्तानें--यम, यमी रहीं। छाया की तीन सन्तानें थीं। दो पुत्र– सावर्णि, शनि तथा एक पुत्री- तपती। भागवत में वडवा को भी पत्नी माना गया है और किन्हीं के कथनानुसार उसका भी एक पुत्र रहा। नाम था श्राद्धदेव।

तृतीयां वडवामेके तासां संज्ञा-सुतास्त्रयः।
यमो यमी श्राद्धदेवश्छायायाश्च सुताञ्छृणु॥

(तीसरी पत्नी को भी कुछ लोग मानते हैं। वह वडवा (घोड़ी) थी। उन तीनों स्त्रियों की सन्तानें इस तरह थीं। संज्ञा या सरण्यू की सन्तानें— यम, यमी, श्राद्धदेव। छाया की सन्तानों के नाम सुनो)

श्रीमद्‌भागवत 12.13.9

ऋग्वेद के अनुसार सरण्यू ही घोड़ी बन जाती है और उसके दो नासत्य नामक पुत्र होते हैं जिन्हें अश्विनी-कुमार भी कहा जाता है। यदि श्राद्धदेव को जिसे कोई-कोई ही सरण्यू की सन्तान मानते हैं, विवस्वान् का पुत्र माने जाने के कारण सातवाँ वैवस्वत मनु मानें तो उसी का समकालीन भाई सावर्णि आठवाँ मनु कैसे हो सकता है? मन्वन्तर तो 432000 वर्षों के बाद बदलता है। (कुछ लोग बदलाव 4320000 वर्ष के बाद मानते हैं।) कोशकारों ने श्राद्धदेव का अर्थ श्राद्धों का देवता यम लिया है, किन्तु यम को कहीं भी मनु नहीं माना गया है। वस्तुतः छाया या सवर्णा का पुत्र सावर्णि ही सातवाँ मनु है। पिता विवस्वान् का पुत्र होने के कारण वह वैवस्वत भी है। वह सर्वसमर्थ शाखा बनाने वाला मनु है। उसकी माँ सौत सरण्यू की हूबहू प्रतिकृति होने के कारण छाया या सवर्णा कहलाई। सवर्णा का पुत्र सावर्णि हुआ। इस तथ्य को भुलाकर वैवस्वत से भिन्न उसे आठवाँ मनु मान लिया होगा, किन्तु सावर्णि भी पिता के नाम पर उसी तरह वैवस्वत है जैसे श्राद्धदेव। वैवस्वत सावर्णि को ही सातवाँ मनु मानना इसलिए भी ठीक है कि मन्वन्तर 14 ही होते हैं। यदि सातवाँ और आठवाँ मनु भिन्न-भिन्न होगा तो फिर 15 मनु बन जाते हैं। इससे बचने के लिए ही सम्भवतः भागवत में जितेन्द्रिय और रौच्य देव सावर्णि को एक ही जितेन्द्रिय रौच्य देव सावर्णि मनु मान लिया गया और वैवस्वत सावर्णि को जो पिता के नाम से वैवस्वत और माँ के नाम से सावर्णि एक ही मनु था, अलग-अलग मनु मान लिया गया। सुरथ के आठवें मनु बनने की बात मुझे प्रक्षिप्त लगती है।

स्वारोचिष मन्वन्तर अर्थात् दूसरे मन्वन्तर में देवीभक्त सुरथ को वरदान मिला मनु बनने का, वह फलीभूत हुआ 30240000 वर्षों बाद? माना यही ठीक हो, पर सातवें मन्वन्तर में लिखे गये मार्कण्डेय पुराण में देवी की महिमा दिखाने के लिए इस समय के पाठक को ऋषि

4320000 वर्ष बाद आने वाले प्रलोभन को दिखाकर कैसे अपने पुराण का इष्ट-साधन कर पायेंगे?

इसलिए मैं इस निष्कर्ष पर पहुँचा हूँ कि इस समय का मनु वैवस्वत सातवाँ मनु है। वही सावर्णि है। इसी समय आठवाँ मन्वन्तर भी नहीं माना जा सकता क्योंकि युग तो यह अट्ठाइसवाँ माना जाता है जिसके अनुसार मनु सातवाँ ही होना चाहिए। उसी का वृत्तान्त काव्य में औचित्य की सिद्धि करता है। यदि ऐसा न भी हो तो भी मेरे इस मिश्रकथात्मक काव्य में सातवें मन्वन्तर का वैवस्वत मनु ही वर्णित है। काव्यौचित्य उसी के पक्ष में ठहरता है।

'शक्ति-विजयम्' के बारहवें सर्ग में देवी राजा सुरथ अर्थात् होने वाले मनु को सम्बोधित करते हुए कहती है कि कलियुग में राजनीति कलुषित हो जायेगी। कोई भी तन्त्र शुद्ध एवं सफल नहीं होगा। फलतः उसे विश्व-सरकार की स्थापना के लिए प्रयत्न करना होगा, अन्यथा, अनेक तरह के विनाशकारी शस्त्रास्त्र तैयार होंगे और राष्ट्र राष्ट्र ही नहीं टकरायेंगे, अपितु राष्ट्र के भीतर ही आतङ्कवादियों से आये दिन हिंसाएँ तथा उपद्रवों के कारण सरकार की मुसीबतें बढ़ती जायेंगी। विश्वशान्ति भंग हो जायेगी। इसका एकमात्र हल होगा विश्व-सरकार का शासन जो अलगाववादियों को गतिहीन कर देगा।

जब भ्रष्टाचार का बोलबाला हो, नैतिक मूल्यों के ह्रास हो जाने से किसी भी ढंग से धन-संचय करने में लोग हिचकें नहीं, चोर बाजारी ही सर्वत्र छा जाये, ऐसे में देवी द्वारा जो सुझाव दिया गया है वह सर्वथा संगत है कि मुद्रा विश्व-सरकार द्वारा अविलम्ब एक बार ही सारे विश्व में बन्द कर दी जाये और वस्तु-विनिमय से काम चलाया जाये। सर्वत्र सरकारी व्यवसाय-केन्द्र हों। निजी व्यापार बन्द कर दिया जाये। सबको— रुग्णों, बूढ़ों और बच्चों को छोड़कर— अनिवार्य तथा उत्पादक कामों पर लगाया जाये। आवश्यक वस्तुओं एवं भोजन सामग्री के वितरण के तीन विभाग हों। एक— सामान्य, दूसरा —विशिष्ट कर्म की अपेक्षा से विशेष तरह के खाद्यान्न, निवास तथा वस्तुओं वाला, तीसरा— रुग्ण, वृद्ध तथा बच्चों के लिए उपयोगी स्थान भोजनादि युक्त। सारे विश्व की माँग के अनुसार उत्पादन हो।

कहीं भी निजी भण्डारण को प्रोत्साहन न मिले।

अर्थशास्त्री और राजनीति-विशारद चिढ़कर मुझसे कह सकते हैं कि तुम अपनी कविता करो और विहार करो अपनी कल्पना में। दूसरों के क्षेत्रों पर अपनी टाँग क्यों अड़ाते हो? पर, प्रथम एक विचार उपस्थित करना तो अन्यान्य शास्त्रज्ञों तथा वैज्ञानिकों में भी देखा जाता है। कवि के विचार को कल्पना कह दिया जाता है। कभी उसका स्वप्न भी साकार हो सकता है। विश्व में जिन्होंने कुछ नया कर दिखाया है, वे प्रारम्भ में स्वप्न-द्रष्टा ही रहे।

वैयक्तिक स्तर पर सब परस्पर प्रेमपूर्वक रहें। ईर्ष्या नहीं, स्पर्धा रहे। खेल, कला-प्रदर्शन, विज्ञान-मेले, पुरस्कार, सम्मान-दान आदि द्वारा कुछ अधिक कर दिखाने का भाव विद्यमान रहे। विवाह ऋषिप्रणीत नियमानुसार हों। संकरता को अभिशाप समझ कर उससे समाज को बचाया जाये। जब तक वर्णाश्रमों की पुनर्व्यवस्था न हो, तब तक अनवस्था को रोकने के लिए प्रतिलोम विवाहों पर रोक लगाना आवश्यक है।

आकस्मिक संकटों और विपत्तियों को झेलने के लिए भगवान् के भरोसे को दवा समझ कर पूरी निष्ठा और शक्ति के साथ निराकरण किया जाये तो विश्वास रखने पर वे हल्की अवश्य लगती हैं। आस्तिक इसे भगवत्कृपा मानते हैं, नास्तिक मनोगत चमत्कार।

कई सालों से यह विचार मेरे मस्तिष्क में चक्कर मारता रहा कि देवी को मुख्य चरित्र मानकर कुछ लिखा जाये। दुर्गासप्तशती का हिन्दी पद्य-रूपान्तर 'दुर्गाचरित' लिखा भी, किन्तु मन नहीं भरा। मेरे दामाद डॉ. लीलाधर पन्त ने मौलिक काव्य लिखने की बात की। जो मन को भाई, परन्तु नाटक और कविता (गीतिका) लिखने में उलझ गया। दो वर्ष पूर्व देवीकाव्य लिखने की प्रेरणा इस तरह मुझ पर हावी हो गई कि मैं सोचने लगा यदि देवी विषयक मौलिक काव्य न लिखा गया तो मैं जीवित नहीं रहूँगा। इन दो वर्षों में विघ्न बाधायें आती रहीं। लेखन-कार्य रुकता रहा। अन्त में इस वर्ष यह सम्पन्न हो ही गया। इस कार्य को सम्पन्न करने में जिन विद्वानों ने प्रेरणा, सुझाव दिये तथा मार्गदर्शन करवाया, वे हैं डॉ. शिवप्रसाद भारद्वाज, डॉ. शशिधर शर्मा, डॉ. देवीदत्त शर्मा।

